निर्विकल्पकैकज्ञानस्वीकारे च विशिष्टप्रत्यक्षसामग्र्या बलवत्याः प्रतिबन्धात् संशयाद्यभावः । संप्रज्ञातयोगेपि वृत्तिः स्वरूपतो भासतएवेत्यभ्युपेय-मिति । चित्तस्य स्वाभासतावादिमते तन्मतमालम्ब्यैवान्यद्दूषणमाह ।

एकसमये चोभयानवधारणम् ॥ २० ॥

सूत्रार्थमाह । न चेत्यादिना युक्तमित्यन्तेन । न च नाप्येकस्मिन्नु-त्पत्तिक्षणएव स्वपरावधारणं युक्तं पूर्वं सत एव प्रत्यक्षगोचरत्वात् स्वस्य च प्रागसत्त्वादित्यर्थः । नन्वेवं स्वोत्पत्त्यनन्तरं स्वग्रहणमस्तु तत्राह । क्षणिकेति । क्षणिकवादिमते या वस्तुन उत्पत्तिः सैव क्रिया तस्य कार्यं सैव च तस्य कर्त्रादिकारकवर्गः तन्मते सर्ववस्तूत्पत्तिमात्र-फलकं निर्हेतुकं स्वयमेव भवतीति सिद्धान्तः । तथा चोक्तं 'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत' इति । अत्र उत्पत्त्यनन्तरं चित्तस्य स्वग्रहणार्था क्रिया न संभवतीत्यर्थः । अस्मन्मतेपि शब्दबुद्धिकर्मणां विरम्य व्यापारा-भावादेकस्या वृत्तेर्द्व्यर्थग्राहकत्वं न संभवतीति भावः । उत्तरसूत्रमवतार-यति । स्यान्मतिरिति । मतिरभ्युपगमः । ननु स्वाभासशब्देन स्वसंतान-भास्यत्वं वक्तव्यं तथा च स्वरसेन विनाशस्वभावेन निरुद्धं नष्टमपि चित्तमुत्तरोत्तरमुत्पन्नेन चित्तान्तरेण ग्राह्यमित्यभ्युपगमः स्यादिति कर्मकर्तृ-विरोधादिदोष इत्यर्थः । तत्र सिद्धान्तसूत्रम् ।

चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ॥ २१ ॥

वृत्तिरूपचित्तान्तरेण वृत्तिरूपचित्ते दृश्येभ्युपगम्यमाने तु बुद्धिबुद्धे-र्वृत्तिवृत्तेरतिप्रसङ्गो ऽनवस्था । एतद्व्याचष्टे । अथेति । बुद्धिबुद्धिश्चित्तगोचरं चित्तं परेषां वृत्त्यतिरिक्तचित्ताभावेन वृत्तिचित्तयोः पर्यायत्वात् । ननु नेयमनवस्था सर्वमेव चित्तं ग्रहीतव्यमिति नियमाभावादिति चेन्न । वृत्तेर-ज्ञातसत्ताङ्गीकारे जानामि न वेत्यादिसंशयापत्तेः । योग्यानुपलब्ध्या ज्ञाना-द्यभावप्रत्यक्षानुपपत्तेश्च । किं च मा भवत्वनवस्था वृत्तिगोचरानन्तवृत्ति-कल्पनागौरवं त्वपरिहार्यमेव । अस्माभिर्लाघवेन सकलवृत्तिगोचरैकविभु-ज्ञानकल्पनादिति । एतेन चित्तनित्यत्वाभ्युपगमिनामपि न्यायवैशेषिका-

णामुत्तरोत्तरज्ञानेन पूर्वपूर्वज्ञानग्रहणकल्पना परास्ता अनवस्थागौरवाभ्यामिति मन्तव्यम् । अतिप्रसङ्गं व्याख्याय स्मृतिसंकरं व्याचष्टे । स्मृतिसंकरश्चेति । बुद्धिबुद्धेरिति शेषः । संकरशब्दार्थमाह । यावन्त इति । विषयानुभवकाले ज्ञानधारा जातेति विषयस्मृतिकालेपि अनन्तानां तज्ज्ञानानां स्मृतिरेकदैव भविष्यति । घटो मया पुरा ज्ञातो घटज्ञानं तज्ज्ञानं चेत्येवमनन्ताकारः सोयं स्मृतिसंकरः प्राप्त इत्यर्थः । अस्मन्मते च पौरुषेयबोधस्य नित्यतया निर्विकल्पमात्रतया च न स्मृतिहेतुत्वमिति । नन्वेतादृशसंकरे को दोष इति तत्राह । तत्संकराच्चेति । संकराभ्युपगमे च घटो मया ज्ञात इत्येकमात्राकारस्मृत्यनुभवो न स्यादित्यर्थः । अन्यान्यपि दूषणानि सूचयन्नास्तिकमतं तिरस्करोति । एवं बुद्धीति । सर्वं बन्धमोक्षधर्माधर्मादिव्यवस्थादिकम् । तदेवं चित्ताद्विविच्य मोक्षो व्यवस्थापितः चित्तस्य च स्वाभासत्त्वं निराकृतम् । इदानीं परेषामिष्टोक्तात्मतत्त्वावधारणस्य स्वाभ्युपगमविरोधेनाप्यन्यायतामाह । ते त्विति । भोक्तृस्वरूपं न न्यायेन संगच्छन्ते न्यायविरुद्धा इत्यर्थः । तेषां विज्ञानवादशून्यवादश्चेति मुख्यं मतद्वयं तत्रादौ विज्ञानवादिनां क्षणिकताख्यस्वाभ्युपगमविरोधान्न्यायविरुद्धत्वं दर्शयति । के चिदिति । सत्त्वमात्रं क्षणिकविज्ञानरूपं चित्तमात्रं परिकल्प्य स्वीकृत्य तस्यैव मोक्षं वदन्ति । अस्ति स सत्त्वविशेषो य एतान् सांसारिकान् पञ्च स्कन्धान् हित्वा अन्यांश्च पञ्चस्कन्धान् युक्तो ऽनुभवतीति ततश्च तत एव स्वाभ्युपगमात् पुनस्त्रस्यन्ति चित्तस्थैर्यापत्त्येत्यर्थः । अतो न्यायविरुद्धास्तइति, पञ्चस्कन्धाश्च विज्ञानवेदनासंज्ञानरूपसंस्काराख्याश्चित्तस्यैव शाखाभेदा न तु चित्ताद्भिन्नाः । तत्र विज्ञानं विषयानुभवः वेदना दुःखं संज्ञारूपे शब्दार्थाविति यावत् संस्कारो वासना एतेष्वेषामपि सुखादीनां प्रवेश इत्यखिलं वस्तु चित्तमेवेति। शून्यवादिष्वाह । तथेति । तथान्ये के चित् स्कन्धानां महन्निर्वेदाय महानिर्वेदाख्यवैराग्यायापुनर्जन्मरूपप्रशान्तये च जीवन्मुक्तस्य गुरोरन्तिके ब्रह्मचर्यं ब्रह्माभ्यासं साक्षात्कारपर्यन्तं करिष्यामीत्युक्त्वा शिष्यतामापन्ना नास्तिका गुरूपदेशात् सत्त्वस्याहंशब्दार्थस्यापि सत्तामपलपन्ति शून्यवा-

दिनो भवन्ति इत्यर्थः । तेपि न्यायविरुद्धा भोक्तुः सत्त्वस्यापलापेन स्वाभिप्रेतस्य मोक्षस्याहंशब्दार्थस्य ब्रह्मचर्यादीनां वा सत्तास्वीकारात् सेयमुद्देश्यविस्मृतिः कथं मूढांश्च लज्जयतीति । एतेनाधुनिकवेदान्तिब्रुवा अपि न्यायविरुद्धा मन्तव्याः । तेपि हि मोक्षाद्यर्थं गुरुमुपसन्ना ब्रह्मातिरिक्तं सर्वं शुक्तिरजतवदत्यन्ततुच्छमिति गुरूपदेशान्मोक्षतत्साधनादिकमेवापलपन्तीति । अपि चोपदेशानन्तरमकृतसाक्षात्कारस्य मननादिसाधनाद्यनुष्ठानाभ्युपगमोपि तेषां न न्याय्यो ऽसतोपदेशेन फलतत्साधनेषु सर्वेष्वेवाविश्वासात् । अश्रद्धया कृतेनापि फलानुदयाच्च । किं बहुना श्रुत्यादिप्रामाण्यबाधनेन ज्ञानप्रामाण्यसंशयाद्याहितेः संशयो योगान्तेपि ब्रह्मणि स्यात् । न च स्वप्रकाशतया ब्रह्मणि न प्रमाणापेक्षेति वाच्यम् । प्रकाशतस्तस्य तत्सिद्धौ कर्मकर्तृविरोधादितिसांख्यसूत्रोक्तदोषात् स्वाभ्युपगतश्रवणादिवैयर्थ्यापत्तेश्च मोक्षसाधनविषयस्य विवेकस्यास्वप्रकाशत्वाच्च । यत्तु अवेद्यत्वेपि प्रत्यक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमिति प्रलपनं तत् शशशृङ्गवन्मन्तव्यम् । वेदनस्य व्यवहारं प्रति सामानाधिकरण्येन हेतुत्वात् द्रष्टव्यत्वादिश्रुतिविरोधाच्चेति । सैषातिनास्तिकता दृश्यतेपि बहिर्मुखानां यतिमानिनामिति । आधुनिकानां वेदान्ते विवर्त्तवादो यथा यथा विचार्यते तथा तथा न्यायविरोधेन सिकतासेतुवद्विदीर्यते । स्वमते तु नास्त्ययं न्यायविरोधः मोक्षभागिनोहंशब्दार्थस्य भोक्तुः स्थिरस्य स्वीकारादित्याह । सांख्ययोगादयस्त्विति । आदिशब्देन ब्रह्ममीमांसादयो ग्राह्याः । प्रकृष्टा वादाः प्रवादाः स्वशब्देनाहं स्वमात्मेत्यादिशब्दजातेन न त्वन्यः । कथमन्यस्यात्माहमित्यादिवृत्तिगोचरः स्यात्तत्राह । चित्तस्य स्वामिनमिति । स्वामी ह्यात्मा लोके व्यवह्रियते यच्चाप्नोति यदादत्ते इत्यादिशास्त्रे चेति । अपरिणामिनि यथेष्टविनियोक्तृत्वाभावात् कथं स्वामित्वं तत्राह । भोक्तारमिति । अत्र च स्वतोपि पुरुषस्य भोगोस्तीत्यवधारणीयम् । प्रकृतोपपत्तये चित्तस्य स्वाभासत्वं निराकृतम् इदानीं सदाज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामादिति सूत्रस्योपपादकं सूत्रमेतेनैव प्रसङ्गेनोत्थापयति । कथमिति । नन्वपरिणामित्वे विषये संचाराभावात्तदाकारपरिणामाभावाच्च कथं

चित्तज्ञातृत्वरूपं चित्तभोक्तृत्वं पुरुषस्य स्यात् । चित्तस्थले हि घटादिविषयग्रहणं चित्तस्य संचारात्तदाकारपरिणामाच्च दृष्टमित्यर्थः । तत्र सिद्धान्तसूत्रम् ।

चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥२२॥

अप्रतिसंचाराया अपि चितेः स्वीयबुद्धिवृत्तिदर्शनं बुद्धिवृत्त्याकारतापत्त्यैव भवतीत्यर्थः । अयं भावः । ज्ञातुः संचारो न साक्षादेव ज्ञाने हेतुः किं त्वर्थाकारता हेतुः सन्निकर्षद्वारा । अन्यथा स्वप्नादौ मनःसंचाराभावेनार्थभानायोगात् । अतो विभुत्वेनैव सर्वत्र सन्निकृष्टस्यात्मनः संचारो नापेक्ष्यतइति । आपत्तिग्रहणं च पुरुषस्य पारमार्थिकाकारप्रतिषेधार्थम् । यथा हि विषयासन्निकर्षकालेपि स्वप्नादौ तद्भानायोगत्या चित्तस्य तदाकारः परिणाम इष्यते नैवं पुरुषस्य चित्तवृत्त्यभावेपि तद्भानं भवति येन पुरुषेपि वृत्त्याकारः परिणाम इष्येत किं तु स्फटिके सन्निकृष्टजपालौहित्यस्येव चित्तवृत्तेः प्रतिबिम्बमेव लाघवादिष्यते उभयत्राकाराख्यपरिणामकल्पने गौरवात् स्फटिकदर्पणादेः स्वप्रतिबिम्बितवस्तुप्रकाशकत्वस्य सिद्धत्वाच्चेति । तदिदं वृत्तिबिम्बितमेव*वृत्त्याकारापत्तिरित्युक्तं सूत्रकारेणेति । भाष्यकारः पुरुषस्य बुद्ध्याकारतां प्रतिपादयितुमादौ बुद्धेरेव रूपमाह । अपरिणामिनीति । भोक्तृशक्तिः पुरुषाख्या ऽपरिणामिनी अतो नापि गतिमती ततो न स्वप्नजाग्रतोश्चित्तस्येव पुरुषस्य ज्ञानं संभवति किं तु वृत्तिसरूपपरिणामिन्यर्थे चितिः प्रतिसंक्रान्तेव प्रतिबिम्बरूपेण संचरितेव सती तद्वृत्तिमनुपतति तद्वृत्तिं चेतनवत्करोतीत्यर्थः । अन्यथा हि घटमहं जानामीति बुद्धिवृत्त्यनुपपत्तिः बुद्धेरनहंत्वात् अचेतनत्वाच्चेत्युत्तरसूत्रे वक्ष्यति । अथाविवेकादेवैतादृशी बुद्धिवृत्तिरिति चेत्सत्यं, तथाप्यविवेक एव प्रतिबिम्बमूलकः दोषान्तराभावात् तथा चेतनभानार्थमपि वृत्तौ तत्प्रतिबिम्बः कल्प्यते बुद्ध्यारूढतयैव शब्दादिवदात्मनोपि भानादिति । इदमेव प्रतिबिम्बं बुद्धेश्चिच्छायापत्तिरित्युच्यते तथा बुद्धेरर्थाकारतावत् आत्माकारतेत्यप्युच्यतइति

* वृत्तिबिम्बितत्वमेवेति चेदभविष्यत्साधुतरम् ॥

मन्तव्यम् । यद्यपि घटाद्याकारपरिणामवदात्माकारपरिणाम एव बुद्धेर्भवति तथापि प्रतिबिम्बतुल्यतया स एव प्रतिबिम्बमप्युच्यते । बुद्धेरूपं प्रदर्श्य पुरुषस्य तदाकारतापत्तिं दर्शयति । तस्याश्चेति । हिशब्दोऽत्रावधारणे, तस्या अपि चितेर्ज्ञानरूपा वृत्तिर्बुद्धिवृत्त्यविशिष्टैवेत्याख्यायते व्यवह्रियते । तत्र हेतुः प्राप्तेत्यादि । प्राप्तश्चैतन्योपग्रहश्चैतन्यप्रतिबिम्बं येन एतादृशं रूपं यस्या बुद्धिवृत्तेस्तदनुकारिमात्रतया तत्प्रतिबिम्बाधारतामात्रेणेत्यर्थः । द्रष्टा दृशिमात्र इति सूत्रेपीदमेव वाक्यं भाष्यकारैः प्रमाणत्वेनोपन्यस्तं, वृत्तिसारूप्यमितरत्रेत्यत्राप्येतदुक्तमिति स्मर्त्तव्यम् । ननु जानाम्यहं क्रुद्धोऽहं भीतोऽहमित्यादिरूपता वृत्तेरेवेति प्रागेवोक्तं तर्हि निर्विकल्पकस्य वृत्तिबोधस्य स्वरूपं कीदृशमिति । उच्यते । यादृशं ज्ञानक्रोधादिवृत्तीनां रूपं तादृशमेव बिम्बप्रतिबिम्बोद्ग्रहणात् तदेव वृत्तिबोधस्य रूपं, स च वृत्तिबोधो वृत्त्यविवेकेन जानामीतिवृत्त्यन्तरस्य विषय एव भवति ज्ञानचितिबोधादिशब्दानां पर्यायत्वादिति । एकाकारतापत्तावागममपि प्रमाणयति । तथा चोक्तमिति । न पातालमित्यादेरयमर्थः । गुहाहितं गह्वरेष्ठं पुराणमित्यादिश्रुतिस्मृतिषु यस्यां गुहायां गुह्यं शाश्वतं ब्रह्म अंशांश्यभेदात् आत्मसामान्यं निहितं संगुप्तम् इति गीयते । सा गुहा न पातालादि किं तु ब्रह्मवृत्त्यविशिष्टां बुद्धिवृत्तिमेव कवयः पण्डिताः पश्यन्तीति । अविशिष्टता च परस्परं प्रतिबिम्बनादुभयोरेव विषयाकारत्वचेतनसाम्यमित्युक्तम् । अतो विविच्य ग्रहणायोग्यतयाऽवस्थितिरेवात्मनः संगोपनं बुद्धाविति श्लोकतात्पर्यार्थः । तदेतदेकाकारत्वमादित्यपुराणेप्युक्तं

नित्यः सर्वगतो ह्यात्मा बुद्धिसन्निधिसत्तया ।
यथा यथा भवेद्बुद्धिरात्मा तद्वदिहेष्यते ॥

इति । ननु भवतु चितेः स्वबुद्धिसंवेदनं शब्दादिसंवेदनं तु कथं भवेत् बुद्धिवच्छब्दादीनामपि चितौ प्रतिबिम्बनसामर्थ्याङ्गीकारे सर्वदैव सर्वार्थभानप्रसङ्गात् । कथं वा चितेः स्वसंवेदनम् । उक्ता ह्यनवस्था चित्तवत् पुरुषेपि समानेत्याशङ्कानिरासायोत्तरसूत्रं प्रवर्त्तिष्यते तत्सूत्रं भाष्य-

कारः प्रकारान्तरेणाप्युत्थापयति । अतश्चेति । अतो बुद्धिपुरुषयोर्वैलक्षण्ये प्रमाणाभावाच्च तदन्यथानुपपत्तेश्चेति यावत् । एतत् आगामिसूत्रप्रतिपाद्यम् । अङ्गीक्रियतइत्यर्थः । चकारोऽस्मदुक्तप्रयोजनसमुच्चयार्थः ।

## द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

सर्वे ग्रहीतृग्रहणग्राह्याः पुरुषस्यार्था भोग्या अस्मिन्निति सर्वार्थम् । अयं घट इत्यनन्तरं घटमहं जानामीति बुद्धेर्वृत्त्यन्तरस्य ग्रहीतृग्रहणग्राह्याकारस्यायं घट इतिवृत्तिवदेव साक्षिभास्यस्य प्रायशो दर्शनात् । सर्वार्थत्वे हेतुः द्रष्टृदृश्योपरक्तमिति । द्रष्टृदृश्योभयाकारमित्यर्थः । बाधकं विना सन्निकृष्टवस्त्वाकारतास्वाभाव्यस्य चित्ते सर्वसंमतत्वादिति भावः । तथा च बुद्धिसंवेदनमेव बुद्धिस्थस्य शब्दादेः स्वस्य च संवेदनं यद्धि शब्दादिपुरुषोभयाकारा बुद्धिवृत्तिः पुरुषे प्रतिबिम्बिता भासते इदमेव शब्दादेः पुरुषस्य च दृश्यत्वं बुद्धेर्दृश्यत्ववदित्यतो न पुरुषदर्शनार्थं द्रष्ट्रन्तरापेक्षा नापि कर्मकर्तृविरोधो ऽन्तःकरणद्वारत्वादिति भावः । एतेन सर्वार्थत्वेन भाष्यकारोक्तं बुद्धिपुरुषयोरविशिष्टाकारत्वमपि सिद्धम् । बुद्धेः पुरुषाकारतातिरेकेण पुरुषवत्त्वासंभवात् । पुरुषस्य बुद्ध्याकारतायाश्च पूर्वसूत्रेणैवोक्तत्वादिति । वेद्यत्वान्यथानुपपत्त्या यः सिध्यति तं बुद्धौ पुरुषोपरागं प्रतिपादयन्समग्रसूत्रं व्याचष्टे । मनो हीति । उपरक्तं तदाकारम् । अन्यथा ग्रहणानुपपत्तेः । युक्तिपूर्वकं द्रष्टुपरागमाह । यत्स्वयं चेति । तन्मनः स्वयमपि पुरुषस्य विषयत्वात् स्वीयचैतन्यलक्षणवृत्तिविशिष्टेन पुरुषेण विषयिणा संबद्धम् आकारितं सन्निकर्षस्य ग्रहणहेतुत्वात् । बुद्धिवृत्तौ च पुरुषस्यासङ्गस्य प्रतिबिम्बातिरेकेणानित्यसन्निकर्षासंभवादिति । तस्मादेतच्चित्तमेवोभयोपरक्ततया शब्दादिविषयरूपेण विषयिपुरुषरूपेण च निर्भासते । साक्षिणि प्रतिबिम्बितं सदिति विषयविषयिनिर्भासं, तत्र हेतुः चेतनाचेतनरूपापन्नं तदाकारम् । एतदेव विवृणोति । विषयात्मकमप्यविषयात्मकमिवेति अचेतनमपि चेतनमिवेति । इवशब्दार्थं दृष्टान्तेनाह । स्फटिकमणिकल्पमिति । यथा एक एव स्फटिकमणिः पार्श्वद्वयस्थयोर्जवेन्द्र-

नीलयोः प्रतिबिम्बनात्स्वीयरूपेण सह त्रिरूप इव भवतीति । एवं चित्तमपि विषयात्मनोः प्रतिबिम्बनात् ग्रहीतृग्रहणग्राह्यात्मकरूपावयववदिव भवति, अतः सर्वार्थमित्युच्यतइत्यर्थः । चित्तमेवेत्येवकारेणान्येषां सन्निकर्षसत्त्वेप्याकारग्रहणसामर्थ्यं नास्तीत्युक्तम् । अत्र च स्फटिकदृष्टान्तो न सर्वांशे बुद्धेः स्वार्थाकारपरिणामस्यैव स्वग्रानुरोधेनेष्टत्वात् स्फटिके च प्रतिबिम्बमात्रस्य स्वीकारात् । किं तु तत्तद्वस्तुसन्निकर्षेण तत्तद्रूपतया प्रतीयमानतामात्रांशे स्फटिकस्य दृष्टान्त इति मन्तव्यम् । यदेतदुक्तं चित्तस्य द्रष्टृदृश्यसारूप्यम् इदमेव भवबीजाविवेकस्य कारणमिति प्रतिपादयति । तदनेनेति । केचिद्बाह्यार्थवादिनः चित्तातिरिक्तचेतनानभ्युपगन्तारो वैनाशिकाः । अपरे विज्ञानवादिनः । लोक्यतइति लोकः । तदुक्तं विज्ञानवादिभिः ।

> अभिन्नोपि हि बुद्ध्यात्मा विपर्यासितदर्शने ।
> ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥

इति । तेषां च वादिनामयं भावः । चित्तस्य चेत्सर्वरूपता स्वीकृता तर्ह्यलं पुरुषेण बाह्यार्थेन वा अनादिवासनावशात् स्वत एव चित्तस्यानन्तपरिणामस्वीकारसंभवात् । दुग्धस्य दधिरूपतावदिति । अनुकम्पामुखेन तेषु समाधानमाह । अस्ति हीति । इत्यन्तं बीजमित्यर्थः । एतेन यदाधुनिका वेदान्तिब्रुवा आहुः । विषयदोषात् करणदोषाद्वा चैतन्ये भ्रमो न भवति विषयकरणदोषयोर्भ्रममात्रकल्पितत्वेन भ्रमात्पूर्वं तयोरभावात्, अपि त्वनिर्वचनीयाविद्यामात्रादिति । तद्वेयम् । चैतन्येपि चित्तवदेव सकलवस्तुप्रतिबिम्बेन सारूप्यस्यैव विषयगतदोषस्य प्रपञ्चारोपहेतुतालाभात् सर्ववस्तूनां भ्रममात्रकल्पितत्वस्य चासिद्धेः शुक्तिरजतादिस्थले क्लृप्तेन सारूप्यदोषेणैवाध्यासोपपत्तावध्यासहेतुतया तदभिप्रेतानाद्यविद्यायां कल्पनानवकाशाच्चेति । तत्रादौ विज्ञानवादिनं बोधयति । समाधीत्यादिना रूपमवधार्यतइत्यन्तेन । भ्रमस्थले ज्ञेयार्थस्य चित्तमात्रताया अस्माभिरप्यभ्युपगमात् । समाधिप्रज्ञायां प्रज्ञेय इत्युक्तमर्थस्य सत्यत्वलाभाय । तथा चायमर्थः । विवादगोचरोर्थश्चित्ते प्रतिबिम्बितो योनुभूयते

स तस्य चित्तस्यालम्बनीभूतत्वाच्चित्तादन्यः । तत्र हेतुः । स चेदिति । स चेदर्थश्चित्ताकारमात्रं स्यात् कथं तर्हि प्रज्ञयैव प्रज्ञाकारो गृह्येत कर्मकर्तृविरोधात् पुरुषस्यानङ्गीकारात् । पुरुषप्रज्ञया पुरुषसिद्धिरर्थप्रज्ञया अर्थस्यापि सिद्ध्याचित्यादिति । अतो विज्ञानातिरिक्तो विज्ञेयोर्थः सिद्धः । अनयैव युक्त्या पुरुषानभ्युपगन्तारं बाह्यार्थवादिनमपि बोधयति । तस्मादिति । तस्मात्प्रज्ञारूपस्याप्रज्ञाग्राह्यत्वाभावादेव प्रज्ञायां प्रतिबिम्बीभूतः प्रतिबिम्बरूपेण जातोर्थो ज्ञानाकारो येन गृह्यते स पुरुष इत्यपि सिद्धमित्यर्थः । ननु स्वमगृहीत्वैव स्वस्य प्रज्ञारूपं गृह्णातु आकाशाग्रहणेपि शब्दवदिति चेन्न । शब्दवत्केवलस्याकारस्याग्रहणात् । अयं घट इति ज्ञानमभूदित्यादिरूपेण रूपादिवद्धर्मिपुरस्कारेणैवाकारानुभवादिति । ननु कर्मकर्तृविरोधः सूत्रकारेणैवोक्तो न तत्स्वाभासमित्यनेनातो भाष्यकारस्य पौनरुक्त्यमिति, मैवम् । तत्र चित्तस्य चित्तग्राह्यत्वं निराकृतमत्र चित्ताकारस्य चित्तग्राह्यत्वं निराक्रियते इति विशेषादिति । पुरुषचित्ततदर्थानां यथोक्तप्रकारैर्विवेकज्ञानमेव तत्त्वज्ञानमिति वेदान्तोक्तोपासनादिव्यावृत्त्यर्थं नास्तिकादिज्ञाननिरसनार्थं चावधारयति । एवं ग्रहीत्रिति । ग्रहीत्रादित्रितयं परस्परविजातीयतया ये विभजन्ति विवेचयन्ति तएव सम्यग्दर्शिनः तैरेव पुरुषो लब्धः । अन्ये तु भ्रान्ता इत्यर्थः । तथा च श्रुतिः ।

> यन्मनसा न मनुते येनाहुर्मनो मतम् ।
> तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥

'अथात आदेशो नेतिनेति' 'न ह्येतस्मादिति नेत्यन्यत्परमस्ती'त्यादिः ॥

स्मृतिश्च ।

> अव्यक्ताद्ये ऽविशेषान्ते विकारेस्मिंश्च वर्त्तते ।
> चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते ॥

इत्यादि । 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वं' 'वासुदेवः सर्वमि'त्यादिश्रुतिस्मृतयस्तु शक्तिमदाद्यभेदेनैवोपासनार्थं प्रवर्त्तन्तइति न तद्विरोधः । एतेन जीवात्मप्रकरणेषु आत्मैक्यश्रुतीनामवैधर्म्यलक्षणाभेदेन विवेकएव तात्पर्य-

मिति द्रष्टव्यम् । विवेकज्ञानस्यैव सम्यग्ज्ञानतया मोक्षहेतुत्ववचनात् । परमात्मप्रकरणं तु जीवादपि विवेकेन परमात्मन एकस्यैवात्मत्वे तात्पर्यमिति मन्तव्यम् । द्वितीयपादे विवेकख्यातिरविप्लवा हानोपाय इत्येवोक्तम् । अत्र तु विवेकज्ञानस्यैव सम्यग्ज्ञानत्वोपपादनेन मोक्षहेतुत्वं प्रभाषितम् । विवेकस्वरूपं च परीक्ष्यतइति विवेकः । चित्तादात्म्यविवेके हेत्वन्तरप्रदर्शकतया सूत्रमवतारयति । इतश्चेति । इतश्च चित्तातिरिक्तः । पुरुष इति शेषः ।

**तदसंख्येयवासनाभिश्चित्र*मपि परार्थं संहत्यकारित्वात् ॥२४॥**

यदुक्तं चित्तस्य सर्वात्मकत्वाङ्गीकारे असंख्यवासनावशात् स्वत एव चित्तस्यापि परिणामोस्तु किं पुरुषेणेति । तन्न । यतस्तच्चित्तमसंख्येयवासनाभिश्चित्रितमपि परार्थं परस्यान्यस्य भोगापवर्गायैव विना तौ न स्थातुं परिणमितुं वा लभते संहत्यकारिपदार्थानां लोके परमात्रार्थत्वदर्शनादित्यर्थः । तथा च पुरुषार्थसमाप्तौ चित्तविलयेन मोक्षोपपत्तिरित्यत्रापि सूत्रतात्पर्यम् । सूत्रं व्याचष्टे । तदेतदिति । भोगापवर्गार्थं सुखादिसाक्षात्कारार्थम् । संहत्यकारित्वात् इतरसाहाय्येनार्थक्रियाकारित्वात्, गृहवदिति । गृहं हि शयनादिकार्यमास्तरणशरीरादिसाहाय्येनैव करोति पुरुषस्तु नित्यचैतन्यरूपतया चैतन्यार्थं नान्यमपेक्षते अन्या चार्थक्रिया पुरुषस्य नास्तीति स न संहत्यकारीत्याशयः । यत्तु संघातपारार्थ्यादिति सांख्ये प्रोक्तम् । तत्र संहननमारम्भकं संयोगो विवक्षितः स चावयवावयव्यभेदात् शय्यासनगृहादिषु सत्त्वादिषु चास्ति न तु पुरुषइति । ननु चित्तं संहत्यापि करिष्यति स्वार्थमपि भविष्यति कः खलु विपक्षबाधकस्तर्क इत्याकाङ्क्षायामाह । संहत्यकारिणेति । न सुखचित्तमिति । सुखचित्तं भोगचित्तं न सुखार्थं न चित्तस्य भोगार्थं तथा तत्त्वज्ञानचित्तमपवर्गचित्तं न चित्तस्यापवर्गार्थं चित्तस्यभोगापवर्गयोरपि कार्यतया सार्थकत्वनियमेनानवस्थाप्रसङ्गात् । यत्कार्यं तत्सार्थकमिति हि सर्वसंमतम् । अतश्चित्तस्यैतदुभयमपि परार्थमित्यर्थः । पुरुषस्य च भोगापवर्गौ स्वरूपचैतन्यरूपतया न कार्याविति नानवस्था

* चित्तमिति पाठो बहुसंमतः ।

पुरुषार्थत्वबाधिनामिति भावः । पुरुषस्य भोगो हि सुखादिसाक्षात्कारः । अपवर्गश्च विवेकख्यातिसाक्षात्कारो वा स्वरूपावस्थानो वा सर्वथैव चैतन्यमात्रा एव अपरिणामित्वाविद्धर्मत्वाच्चेति । ननु परार्थतामात्रेण न पुरुषसिद्धिर्विनाशादीनामपि परार्थत्वसंभवात् विनाशार्थमेवोत्पत्तेः परैरभ्युपगमादित्याशङ्कायामाह । यश्चेति । भोगापवर्गार्थवानेवात्र परः साध्ये प्रविष्टो ऽतो न सामान्येन येन केन चित्परेण सिद्धसाधनमर्थान्तरं चेत्यर्थः । स्वोत्तरोत्पन्नक्षणिकचित्तस्य भोगार्थकतया पराभिप्रेतं सिद्धसाधनमपाकरोति । यत्तु किं विदिति । स्वरूपेण आत्मरूपेण भोक्तृतयेति यावत् । यस्त्विति । यस्त्वसौ विशेषः पुरुषाख्यः परः स कूटस्थनित्यत्वात् न संहत्यकारीति न तस्य परार्थत्वापत्त्यानवस्थितिरित्यर्थः । तदेवं बुद्धिपुरुषविषयाणां विवेकं प्रदर्श्य एतज्ज्ञानाद्याद्यं मोक्षमादौ प्रतिपादयति ।

विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥

मातृमानमेयात्मकस्याखिलप्रपञ्चस्य तप्तायःपिण्डवदेकीभावापन्नस्य यथोक्तप्रकारैरन्योन्यं विशेषदर्शिनो विवेकसाक्षात्कारिणश्चित्तस्यात्मभावे भावना स्वसत्ताजिज्ञासा कोऽहमासमित्यादिरूपा भाष्ये व्याख्येया । तस्या भयशोकप्रवृत्तिनिवृत्त्याद्यनर्थहेतोर्निवृत्तिराद्यो मोक्षो भवतीत्यर्थः । स्वर्गनरकमोक्षादिभिर्हि विचित्ररूपता चित्तस्यैव भवति न तु सदैकरूपचिन्मात्रस्य न ममेत्यवधारणे सति नैवात्मभावचित्ततोदेतीति भावः । तथा च श्रुतिः । 'एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरव'मितीत्यादिः । तदेतदुक्तं पञ्चशिखाचार्यै'राद्यस्तु मोक्षो ज्ञानेने'ति । अत्रादौ भाष्यकार आत्मभावभावनामेव सकारणां प्रतिपादयति । यथेत्यादिना । तत्रापीति । पुरुष इति शेषः । विशेषदर्शनबीजमिति । आत्मभावजिज्ञासाद्वारेति शेषः । इत्यनुमीयतइति । विविदिषन्ति यज्ञेनेत्यादिश्रुतेः । पापक्षयाद् शुद्धमतिर्बाह्येति ज्ञानमुत्तममिति स्मृतेश्चेति शेषः । तस्य यथोक्तक्रमेवतः स्वाभाविकी ऐहिकसाधननिरपेक्षा, तथा च यथोक्तं कर्म आत्मभावनायाः कारणम् । तत्र च नैहिकत्वनि-

यम इत्यायातम्। ऐहिकसाधनशून्यस्य प्राक्तनतथाविधकर्माभावे च सा भावना नोदेति प्रत्युत देहाद्यात्मतायामेकरुचिर्भवतीति, अत्र पूर्वाचार्यवाक्यं प्रमाणयति। यस्याभावादिति। यस्य कर्मणोभावादिदं वक्ष्यमाणं फलमुक्तं पूर्वाचार्यैः। तदेवाह। स्वभावमिति। स्वभावमात्मभावं त्यक्त्वा एषां सत्कर्मशून्यानां पूर्वपक्षे नित्यदेहाद्यात्मतायामेव रुचिः श्रद्धातिशयो भवति। अरुचिश्च तत्त्वनिर्णयइत्यर्थः। आत्मभावनायाः कारणमुक्त्वा स्वरूपमाह। तत्रात्मेति। कोहमासं किं नरादिरूप आसं कथमासं दुःखेन दंशन*-वासं किं स्विदिदं वर्त्तमानमपि मम स्वरूपं किं देहो वा मन आदिर्वा कथं स्विदिदं केन वा प्रकारेण पुण्यपापादिना तिष्ठतीत्यादिरर्थः। के भविष्याम इत्याद्योक्तत्वएव बहुवचनं, तथा च यज्जिज्ञासेत्यभयादिनिवृत्तये विशेषदर्शनं पुरुषः संपादयति सैवात्मभावनेत्यर्थः। आत्मभावनामशेषतो व्याख्याय सूत्रवाक्यार्थमाह। सा त्विति। विशेषदर्शनात्कुतो निवृत्तिरिति प्रश्नस्योत्तरमाह। चित्तस्येति। एष भावरूपो विचित्रः परिणाम आत्मनो न भवति किं तु चित्तस्यैवाविद्याजन्यत्वात् अविद्यायाश्च चित्तधर्मत्वात् पुरुषस्त्व विद्याशून्यत्वाच्छुद्धः पापपुण्यविवर्जितः। ततश्च चित्तधर्मैर्जन्ममरणसुखदुःखादिभिरपरामृष्टः कदाप्यसंबद्ध इति। तत इति विशेषदर्शनादस्य कुशलस्यात्मभावना निवर्त्ततइत्यर्थः। तन्निवृत्तेः स्वर्गनरकादिषु रागद्वेषादिनिवृत्तिः फलमिति। तस्य विशेषदर्शिनो लक्षणं संप्रज्ञातयोगं वक्ष्यमाणमुक्तेश्च कारणभूतमाह।

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥

कैवल्ये प्राग्भारो यस्य तत्कैवल्यप्राग्भारम्। कैवल्याभिमुखमिति यावत्, व्याचष्टे। तदानीमिति। तदानीं विशेषदर्शनावस्थायां स्वर्गादिवैराग्यवशात् चित्तमन्यथा भवतीत्यनेनान्वयः। विषयप्राग्भारं विषयाभिमुखम् अज्ञाननिम्नमज्ञानमार्गसंचारि एवमुत्तरत्र, न चानेन कोमलकण्टकवत् उत्पन्नमात्रेण विशेषदर्शनेनैव कृतकृत्यता भवति पूर्वसंस्कारवशात् अन्तरान्तरा मोहाख्यानां भवदुःखबीजवृत्तीनामनुवृत्तेरित्याह।

* दुःखेनेदृशेन वासमिति दुःखेन दर्शनवानासमिति वा कल्प्यम्।

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥

व्याचष्टे । विवेकेति । विवेकप्रत्ययनिम्नस्येत्यस्य विवरणं सत्त्वेत्यादि । सत्त्वपुरुषान्यतामात्रेण प्रवहणशीलस्येत्यर्थः । तच्छिद्रेषु स्थानेषु अविद्यारूपाणां प्रत्ययानामाकारा अस्मीत्याद्याश्च प्रदर्शिताः । अस्मीति । देवमनुष्यादिरूपोस्मीत्यर्थः । केवलास्मितायाः संप्रज्ञातयोगेपि सत्त्वात् क्षीयमाणेभ्यो बीजेभ्यः क्षीयमाणबीजेभ्यः । एतस्य विशेष्यं पूर्वं संस्कारेभ्य इति । ननु ज्ञाने जातेपि चेत् पूर्वसंस्कारवशाद्व्युत्थानदशायां कदा चिदविद्योदयः कथं तर्हि संप्रज्ञातप्रवाहेणापि अविद्यानिवृत्तिः स्यात्तत्राह ।

हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

एषां संस्काराणां हानं दाहः स्वकार्यासामर्थ्यं क्लेशानामिवोक्तं पूर्वाचार्यैरित्यर्थः । 'ध्यानहेयास्तद्वृत्तयः' 'ते प्रतिप्रसवहेयाः सूक्ष्मा' इति सूत्राभ्यां यथा स्थूलसूक्ष्मक्लेशानां तत्त्वज्ञानचित्तलयाभ्यां दाहनाशौ प्रोक्तौ तथा तत्संस्काराणामपीति फलितार्थः । एतदेव व्याचष्टे । यथेति । यथा संप्रज्ञातयोगिनो व्युत्थानदशायां पूर्वसंस्कारजाः क्लेशा अविद्यादिवृत्तयो दग्धबीजतुल्याः सत्यो न संस्कारं जनयन्ति तथा पूर्वसंस्कारा अपि संप्रज्ञातपरंपराजनितेन निष्ठारूपेण ज्ञानाग्निना दग्धबीजतुल्याः सन्तः प्रत्ययं न प्रसवतइत्यर्थः । पूर्वसंस्कारः प्राचीनः क्लेशसंस्कारः ज्ञानकाले ज्ञानसंस्कारेण प्रतिबन्धात्संस्कारो नोत्पद्यतइत्याशयेन पूर्वपदम् । अत्र ज्ञाननाशोपि क्लेशवदुपलक्षित इति । नन्वेकदा चेद्दृष्टं मम जन्म मरणं दुःखादिकं नास्तीति तर्हि कदा चिदन्तरान्तरा मोहेपि तद्धानार्थं प्रवृत्तिर्नोपपद्यते मोहस्यापि चित्तधर्मतायाः पूर्वं निश्चितत्वादिति चेन्न । चित्तस्य मोहसत्त्वे पुनश्चित्तस्य भवद्दुःखोत्पत्त्या पुरुषस्य दुःखभोगः स्यादित्याशयेनैव ज्ञानिभिरपि चित्तस्यात्यन्ततो मोहनिवृत्त्यर्थं यतनात् । भोगश्च चिन्मात्रस्यैवेत्यसकृदावेदितमिति । ननु संस्कारत्वाविशेषात्तत्त्वज्ञानसंस्कारा अपि किं संप्रज्ञातनिष्ठया नश्यन्ति, नेत्याह । ज्ञानसंस्कारास्त्विति । अविरुद्धत्वादिति शेषः । तर्हि कथं तेषां नाशः स्यादिति, तत्राह । इति

तच्चिन्त्यतइति । अधिकारसमाप्तौ चित्तेन सहैव तेषां नाशात्तत्साधनचिन्ता नास्तीत्यर्थः । आशु मुमुक्षूणां त्वसंप्रज्ञातेनापि तन्नाशश्चिन्तित इति भावः । उक्तस्य संस्कारहानस्य प्रकारमाह सूत्रद्वयेन ।

प्रसंख्यानेप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥

प्रसंख्यानं विवेकसाक्षात्कारः तत्रापि यो ऽकुसीदः कृषीवलवत् सर्वभावाधिष्ठातृत्वादिरूपां सिद्धिं न प्रार्थयते तस्य योगविघ्नाभावेन सर्वथा निरन्तरं विवेकख्यात्युदयाद् धर्ममेघनाम्नी संप्रज्ञातयोगस्य परा काष्ठा भवतीत्यर्थः । तदेतद्व्याचष्टे । यदेति । तत्रापि तत्फलेपि, सर्वथाशब्दार्थमाह । संस्कारेति । संस्काररूपस्य बीजस्य क्रमेण क्षयाद्दाहाद्धीयमानाद्धेतोः प्रत्ययान्तराणि अविद्यान्तराणि* यदा न जायन्ते तदा धर्ममेघसमाधिरित्यर्थः । क्लेशकर्मादीनां निःशेषेणोन्मूलकं धर्मं मेहति वर्षतीति धर्ममेघः । अस्याः समाधेर्धर्मद्वारकफलं द्वितीयमोक्षमाह ।

ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

निवृत्तिर्दाहसमाप्तिः । व्याचष्टे । तल्लाभादिति । समूलकाषमिति । मूलं क्लेशसंस्कारास्तैः सह क्लेशा अभिनिवेशातिरिक्ताश्छिन्ना भवन्ति अत एव कर्माशयाश्च प्रारब्धातिरिक्ताः क्लेशाख्यमूलेन सह हताः स्युरतो न पुनरुत्पद्यन्तइत्यर्थः । ननु दुःखात्यन्तानिवृत्तिरेव मोक्षो जीवतश्चावश्यं दुःखम् । 'न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति' इति श्रुतेः, तत्कथं जीवन्मुक्तिरित्याशयेन पृच्छति । कस्मादिति । उत्तरं, यस्मादिति । तथा च दुःखनिदानात्यन्तोच्छेदस्य गौणमुक्तित्वमिति भावः । अत्र प्रमाणमनुपलब्धिमाह । नहीति । तदुक्तं गौतमाचार्यैः 'वीतरागजन्मादर्शना'दिति । अयमपि मोक्षः पञ्चशिखाचार्यैरुक्तो द्वितीयो रागक्षया†दिति । अत्र जीवन्मुक्तस्य सवासनक्लेशात्यन्तदाहनिर्णयात् आधुनिकवेदान्तिनामविद्यालेशस्वीकारो ऽविद्यामूलक एवेति स्मर्त्तव्यम् । इदानीं मुक्तस्य जीवन्मुक्तस्य परममुक्तिप्रकारमाह सूत्रद्वयेन ।

* अविद्यारूपाणि इति पा० २ ।  † संक्षयादिति पा० २ ।

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम् ॥ ३१ ॥

तदा तस्यां जीवन्मुक्तावस्थायां * क्लेशकर्मणोर्ज्ञानावरकमलयोरपगमेन हेतुना ज्ञानस्य सत्त्वप्रकाशस्यानन्त्यादिविभुत्वात् ज्ञेयं प्रकाश्यमल्पं तदपेक्षया भवतीत्यर्थः । यदि हि पञ्चविंशतितत्त्वातिरिक्तमन्यदपि वस्तु तिष्ठेत् तदा तदपि प्रकाश्येत ज्ञेयस्यैव तु अल्पतया अन्यच्च प्रकाश्यते न तु सत्त्वस्याल्पतयेति भावः । तदेतन्नाचष्टे । सर्वैरिति । अनन्तं स्वभावतो व्यापकं ज्ञानं सत्त्वमिति भूतसत्त्वव्यावर्त्तनायोक्तं प्रवर्त्तितमिति अस्य विवरणम् सुघाटितमिति । शेषं भाष्यं सुगमम् । अत्र तमोभिभवानन्तरमेव वृत्त्युत्पत्तिवचनाद्वृत्तेस्तमोनाशकत्वमाधुनिकवेदान्तिनामपसिद्धान्त इति स्मर्त्तव्यम् । एतादृशं सर्वज्ञत्वं लोके ऽतीवाश्चर्यमन्धमणिवेधादिवदिति बौद्धोपहासमुखेन दर्शयति । यत्रेदमिति । यत्र क्षुद्राणामपि जीवानां योगबलादेतादृशसार्वज्ञे बौद्धैरिदं दृष्टान्तजातमसंभवदर्शनायोक्तमुपहसद्भिरित्यर्थः । किं तत् तदाह । अन्ध इत्यादि । अविध्यत्सच्छिद्रमकरोत् तं मणिमङ्गुलिहीनो ऽवावयत् ग्रथितवान् तं मणिं ग्रीवाशून्यः प्रत्यमुञ्चत कण्ठाभरणमकरोत् तं कण्ठाभरणं जिह्वाशून्यस्तुतवानितीत्यर्थः । दृष्टान्तचतुष्टयस्यायमाशयः । अनाद्यविद्यामूढचित्तैः सांख्याद्यभिमतसूक्ष्मार्थानामवधारणरूपं वेधनमेवादावशक्यं ततश्च तस्य सूक्ष्मार्थस्याविरलवृत्तिसत्ता च सूत्रेण ग्रथनमप्यशक्यम् । ततोपि सर्वथा विवेकख्यातिरतीवाशक्या ततश्च तादृशचित्तस्य परिपूर्णज्ञानत्वेन स्तुतिरप्यशक्येति । आस्तिकैस्तु श्रुतिस्मृतिप्रामाण्येनैतत्सर्वं श्रद्धेयमिति भावः । यथोक्तसार्वज्ञात् परवैराग्योदयेनासंप्रज्ञातपरंपराजन्यं प्रारब्धभोगासमाप्तिजन्यं वा तृतीयं मुख्यमोक्षमाह ।

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

ततो धर्ममेघोदयात् क्लेशकर्मनिवृत्त्या ज्ञानस्यानन्त्ये सति परवैराग्येण पुरुषार्थसमाप्त्या कृतार्थान् पुरुषान् प्रति गुणानां सत्त्वादीनां परिणा-

* जीवन्मुक्त्यवस्थायामिति पा० २ ।

मक्रमः समाप्यते कृतार्थपुरुषाणां भोगापवर्गिकः परिणामः पुनर्न भवती- त्यर्थः । क्रमश्चाविरलाधारेत्युत्तरसूत्रेण व्याख्यास्यते । तत्र इतिपदं व्याचष्टे । तस्य धर्ममेघस्योदयादिति । कृतार्थानामिति । पुरुषाणामिति शेषः । तथा च कृतार्थपुरुषस्वामिको गुणानां परिणामक्रमः समाप्यतइत्य- र्थः । न तु गुणानामखिलस्य परिणामक्रमस्य समाप्तिरत्रोक्ता कृतार्थं प्रति- नष्टमप्यनष्टमित्युत्तरसूत्रादिति । समाप्तौ हेतुमाह । नहीति । नहि सत्त्वादयो गुणाः कृतभोगापवर्गा अत एव समाप्तक्रमाः तं पुरुषं प्रति क्षणमप्यवस्थातुं समर्थाः स्थितिहेतुपुरुषार्थाभावादिति । यदि च सूत्रभा- ष्ययोर्गुणशब्देनात्र बुद्ध्यादय एव पुरुषोपकरणान्युच्यन्ते तदा यथाश्रुतमेव व्याख्येयम् । अत्राचेतनानां चेतनार्थतया चैतन्याधीनसत्ता वेदान्तिभि- रुच्यमाना सिद्धेति स्मर्त्तव्यम् । इयमपि तृतीया मुक्तिः पञ्चशिखाचार्यै- रुक्ता 'कर्मतयात्* तृतीयस्तु व्याख्यातं मोक्षलक्षण'मिति । अत एव तत्त्वसमाससूत्रं 'त्रिविधो मोक्ष' इति । इदमत्रावधेयम् । यदेताभ्यां सूत्राभ्यां ज्ञानस्यानन्त्यात्सार्वज्ञाख्यात् मोक्ष उच्यते इदं मुख्यकल्पाभिप्रायेणोक्तं वैराग्यादेव सुखेन मोक्षसिद्धेः, न तु सार्वज्ञादिकं विना मोक्षो न भवतीत्याशयेन । यतः सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति सूत्रे भाष्यकृता ईश्वरस्यानीश्वरस्य प्राप्तविवेकज्ञानस्येतरस्य वेत्यनेनासर्वज्ञस्यापि अभि- माननिवृत्तिमात्रादेव मोक्ष उक्त इति । तथा चोक्तं 'विवेकख्यातिरविप्लु- वा हानोपाय' इति । 'सति मूले तद्विपाको जात्यायुर्भोगा' इति च । संसार बीजं हि अनात्मन्यात्मरूपाऽविद्या रागद्वेषधर्माधर्मतद्विपाकादिहेतुत्वात् सा चेद्विवेकख्यात्या नाशिता तर्हि तत एव संसारोच्छेदे सार्वज्ञाद्यपेक्षा नास्तीति । तथा च विष्णुपुराणे

अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।
अविद्यातरुसंभूतिबीजमेतद्द्विधा स्थितम् ॥

इति । ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः परिणामानां प्रतिक्षणमुत्पादविनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः । स चायमर्थः कथं

* कृत्क्षयादिति पा० २

क्रमशब्दाल्लभ्यते क्रमशब्दस्य पौर्वापर्यमात्रवाचित्वादित्याशयेन क्रमशब्दार्थं पृच्छति । अथेति । अयमेतत्सूत्रीयः । अत्र प्रत्युत्तरं सूत्रम् ।

क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥

क्षणप्रतियोगी क्षणस्यावसरस्य विरोधी क्षणेनाप्यनन्तरित इति यावत् । एवंरूपोऽत्र क्रमो विवक्षितो न तु पौर्वापर्यमात्रमिति विशेष्यदलार्थः । परिणामश्च पूर्वधर्मापाये धर्मान्तरोत्पत्तिरित्युक्तमेव, ईदृशे च क्रमे प्रमाणप्रदर्शनपरं परिणामापरान्तनिर्ग्राह्य इति विशेषणम् । भाष्यकारस्तु क्षणप्रतियोगीत्यस्य पर्यवसितमर्थमाह । क्षणानन्तर्यात्मेति । क्रम इत्युत्तरेणान्वयः क्षणानन्तर्यात्मा क्षणानन्तर्यधर्मकः । आनन्तर्यं चाव्यवधानं क्रमस्तु पूर्वापरीभावः । तथा च क्षणाव्यवहितपरिणामधारा पूर्वसूत्रे परिणामक्रमशब्दार्थः । अनवच्छिन्नधारायाः प्रमाणप्रदर्शकं सूत्रावयवं व्याचष्टे । परिणामस्येति । पूर्वान्तापेतया वस्त्रादिरूपस्य परिणामस्यापरान्तेन चरमावस्थया अनवच्छिन्नपरिणामधारा अनुमीयतइत्यर्थः । अत्र युक्तिमाह । नहीति । अननुभूतोऽप्राप्तो यथोक्तक्रमो यैरेवंभूताः क्षणा यस्याः साऽननुभूतक्रमक्षणा पुराणता, तथा च वस्त्रस्यान्तकाले दृश्यमाना पुराणता नह्यननुभूतक्रमक्षणा संभवतीत्यर्थः । अतः पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलादिरूपैः परिणामक्षणेष्वविरलः क्रमोऽनुमीयतइति । नन्वपरान्तेनानित्येष्वेव क्रमः सिद्धो न तु प्रधानेऽपि तस्य चरमावस्थाया अभावादतो गुणानां परिणामक्रमे किं प्रमाणं येन तत्समाप्तिः पूर्वसूत्रोक्ता घटेत तत्राह । नित्येषु चेति । नित्येषु स्वतोऽपरान्ताभावेऽपि विकाराणामपरान्तैरेव प्रतिक्षणपरिणामो दृष्टोऽनुमित इत्यर्थः । धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यतइति प्रागुक्तत्वादिति भावः । ननु परिणामक्रमाङ्गीकारे नित्यत्वहानिरित्याशङ्कायामाह । द्वयी चेति । तथा च परिणामित्वेन कूटस्थनित्यतैव विरुध्यते न नित्यतासामान्यमित्याशयः । नित्यस्य सामान्यलक्षणमाह । यस्मिन्निति । तत्त्वं न विहन्यते स्वरूपं नातीतं भवति अत्र चातीतताशून्यत्वमात्रं नित्यस्य सामान्यलक्षणमिति बोध्यम् । तच्चोभयसाधारणमित्याह । उभय-

परस्परवियोगो हि उपाध्युपाधिमतोरुभयोरेव केवलता एकाकिता भवति ते चोभे एव दुःखभोगनिवृत्त्याख्यपुरुषार्थसाधने भवत इति द्वे एव कैवल्ये लक्षिते तयोश्चाद्यं कैवल्यं पुरुषस्योपचरितमित्युक्तं सांख्यकारिकायाम् ।

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥

इति । ननु स्वरूपप्रतिष्ठारूपं कैवल्यं दुःखभोगात्यन्तनिवृत्तिरूपो वा पुरुषार्थः पुरुषस्य तत्र निराकृतः मोक्षस्यान्यमात्रनिष्ठत्वे पुरुषार्थत्वे मोक्षार्थं प्रवृत्त्यनुपपत्तेः पुरुषार्थं हि करणानां प्रवृत्तिरिति । इतिशब्दः शास्त्रसमाप्तिसूचनार्थः । भाष्ये कार्यकारणात्मनामिति कार्यकारणभावापन्नानां महदादिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीरघटकानामित्यर्थः न तु कार्यमात्रस्थूलशरीरं तत्सत्त्वेपि कैवल्योदयादिति । ननु स्वस्य स्वप्रतिष्ठत्वानुपपत्त्या कथं स्वप्रतिष्ठत्वं तत्राह । स्वरूपेति । पुरुषस्य पुनर्बुद्धिसत्त्वासंबन्धात् केवला चितिशक्तिरेव स्वरूपप्रतिष्ठेत्यर्थः । तस्या इति । स्वरूपप्रतिष्ठायां सदैवावस्थानं पुनरप्रच्यवः कैवल्यं द्वितीयमिति शेषः ॥

योगग्रन्थसहस्राणां सर्वोपनिषदां तथा ।
सतां च यत्र तात्पर्यं सोऽयं व्यासेन भाषितः ॥

व्याख्यातश्च यथाशक्ति निर्मत्सरधिया मया ।
एतेन प्रीयतामीशो य आत्मा सर्वदेहिनाम् ॥

इति श्रीविज्ञानभिक्षुविरचिते पातञ्जलभाष्यवार्त्तिके कैवल्यपादश्चतुर्थः ॥ ४ ॥

॥ समाप्तं चेदं दर्शनम् ॥

॥ श्रीविश्वनाथो विजयतेतराम् ॥



॥ श्रीः ॥

# ॥ योगवार्तिकस्य शुद्धिपत्रम् ॥

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १६ | क्षिप्रात्पूर्वंत्र | क्षिप्रात्पूर्वं न |
| ,, | २० | समाध्यभ्यासा- | समाध्याभासा- |
| ५ | १४ | ननु | न तु |
| ६ | ११ | कित्या- | मित्या- |
| ८ | १६ | दृष्टृ | दृष्टृ |
| ६ | १४ | सूख | सुख |
| ,, | २५ | तृत्ति | वृत्ति |
| १० | ८ | न संप्र | नासंप्र |
| ,, | ,, | विरोध | निरोध |
| ,, | १५ | लयस्य | लप्स्य |
| १३ | १६ | केव्लः | केवलः |
| ,, | २७ | प्रतिबिम्बो | प्रतिबिम्ब उ- |
| १८ | २५ | करणत्त्व | कारणत्त्व |
| ,, | २६ | शेषः | विशेषः |
| १६ | २२ | चैतन्ये | चैतन्येन |
| २० | ४ | अनुमान | अनुमेय |
| ,, | ७ | बीज् | विज् |
| ,, | ६ | यथा | तथा |
| ,, | १६ | व्यावृत्यात्र | व्यावृत्यात्राऽ |
| ३० | १८ | संयोगाऽ | संयोग- |
| ३२ | ६ | देहाद्धे | देहाद्धे |
| ,, | ११ | केवलं | कैवल्यं |
| ३३ | ६ | तर्कस्या | तर्कौ चास्य वि- तर्कस्या |
| ,, | १० | विकल्प | वितर्क |
| ,, | ,, | शब्दार्थो | शब्दार्थत्वा |
| ,, | २६ | संयोगं | संयोग- |
| ३४ | ५ | रूपस्या- | रूपस्य- |
| ,, | १८ | अस्य | अस्या |
| ,, | २५ | नुगते | नुगतं |
| ३६ | २ | कस्मिचा | कस्मिंच |
| ,, | ७ | सर्वार्थे | स चार्थे |
| ३७ | ३ | वृत्तिमतो | वृत्तिमन्तो |
| ,, | ६ | तथा च | तथा |
| ,, | १६ | वदन्ती | वदती |
| ,, | १७ | संज्ञात | संप्रज्ञात |
| ४० | १३ | ऽव्यक्त | व्यक्त |
| ,, | १७ | वाकुर्य्ये | व्याकुर्य्ये |
| ४१ | ७ | युरुष | पुरुष |
| ,, | १६ | वक्ष्यमाणात्स | वक्ष्यमाणत्वात्स |
| ४२ | ८ | उपं | उप |
| ,, | १२ | कश्चीति | कश्चीती |
| ,, | २० | गर्भादयो | गर्भादयः |
| ४३ | ६ | व्यहं | ह्यहं |
| ,, | २२ | रूपाच्च | रूपा च |
| ,, | ,, | निच्छेत्यादि | नित्येच्छादि |
| ,, | ,, | सत्त्वे | मत्त्वे |
| ४४ | १ | विषय | विषम |
| ,, | ११ | कस्याः | तस्याः |
| ४५ | ६ | वृति | मिति |
| ,, | १६ | तत | तत् |
| ४६ | १४ | पाद्य | पाध्य |
| ,, | २० | नद्या | नह्या |
| ,, | २२ | लिङ्गदेश | लिङ्गदेह |
| ,, | २६ | जीवेश्वरत्वं | जीवेश्वरत्व- |
| ४७ | ४ | मेदे | भेदे |
| ,, | ६ | स्वत्यन्तं | स्त्वत्यन्तं |
| ,, | १६ | स्यापि तथा | स्यापितया |
| ,, | ३१ | त्पर | त्त्पर |
| ४८ | २ | नैति न | नैत्यन्य |
| ,, | ५ | तस्य | तत्स्य |
| ,, | १६ | बहुत्वं | बह्विति |
| ४६ | १ | तात्पर्थ | तात्पर्य |
| ,, | २० | निमिता | निमित्ता |

## योगवार्तिकस्य शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ४९ | २१ | तस्मात्स्वेति | तस्यात्मेति | ७२ | ४ | परशुद्धि | परिशुद्धि |
| ५० | २० | कारू | कारु | ,, | १८ | संकीर्णगृहीत- मात्राद | असंकीर्णगृहीत- मात्रान |
| ५१ | १ | सत्रात् | सूत्रात् | | | | |
| ,, | ५ | कालेना | काले ना | ,, | १९ | तर्काद्या | तर्काया |
| ,, | ६ | प्रास्या | प्राप्त्या | ,, | २१ | शुन्ये | शून्ये |
| ५२ | २१ | ज्ञाने | ज्ञाते | ,, | २५ | शंकेत | संकेत |
| ५३ | ११ | आत्म | आत्मा | ७३ | १६ | एका | एकां |
| ५४ | ४ | दृष्ट | दृष्टा | ७४ | १९ | अन्ते | अन्त्ये |
| ,, | १० | मन्दति | मन्वन्ति | ७५ | ३ | नियमि | नियामि |
| ,, | १३ | भावे | भाव | ,, | ६ | कत्पना | कल्पना |
| ,, | ,, | ध्यानयो | अनयो | ,, | १३ | रिक्त | रिक्तता |
| ,, | २० | कायो | कार्यो | ७६ | ११ | रूपेणात्रा | रूपेण द्विधा |
| ५५ | १० | प्रयोगा | प्रयोक्त्रा | ,, | २२ | शान्तादि | शान्तोदिता |
| ,, | २२ | त्रिकालता | त्रिकालतः | ७८ | १ | यथा यत्र | यथान्यत्र |
| ५६ | १ | संयमः | संगमः | ,, | ३ | नवा | नवाः |
| ,, | ६ | ब्रह्मणो | ब्रह्मणः | ,, | २० | पादान | पादानत्व |
| ५७ | ८ | मोक्ष | मोक्ष | ,, | ,, | दर्शन | दर्शने |
| ,, | २२ | एता | येता | ७९ | २२ | माधेः | माधिः |
| ,, | २३ | देवाश्च ना | देवाश्चना- | ,, | २५ | स्थूलार्थे | स्थूलेर्थे |
| ५८ | ४ | त्करो | त्कारो | ८० | ४ | समाधे | समाधि |
| ६० | ११ | कोष्ठ्य | कोष्ठ्य | ८१ | २ | त्स्वर्वाथग्राही | त्सर्वार्थताग्राही |
| ६१ | २५ | कारणाभा | कारणभा | ,, | ,, | स्फुट | स्फुटः |
| ६२ | १७ | जातीयत्वेना | जातीयत्वेन | ,, | ८ | पादपूरणार्थः | पूरणीयः |
| ६३ | २ | विषा | विष | ,, | १६ | परा | न परा |
| ,, | ६ | तत्रैव | तथैव | ८२ | २१ | पुरुषे | पुरुषे |
| ,, | ८ | सुखिता | सुखित | ,, | २२ | द्रव्यादि | द्रव्यत्वादि |
| ६४ | २२ | संशयं | संशय | ८३ | २६ | संप्रज्ञाता व्युत्थानं | संप्रज्ञाताद्व्युत्थान |
| ६४ | २४ | वत्तमाण | वक्ष्यमाण | | | | |
| ६६ | ११ | विष्वग् | विष्वग् | ८४ | ४ | द्यार्थे | चार्थे |
| ,, | २७ | अपि | अपिच | ,, | ८ | मध्येवा | मध्ये वाः |
| ६७ | ११ | संवेदः | संविदः | ,, | १८।२० | नाशकनाश्य | नाशकानाश्य |
| ,, | २४ | लम्बने | लम्बनं | ८५ | १४ | विलपितो | विलयितो |
| ६८ | १६ | वशीक | वशीका | ८६ | २४ | शुद्ध | शुद्धः |
| ,, | २३ | मन्तरमपितु | नन्तरं तु | ८७ | ५ | भुञ्जीयामिति | माभुञ्जीयेति |
| ६९ | ५ | सामार्थ्ये | सामर्थ्ये | ८८ | १० | योगाः | योगः |
| ७० | १ | यत्र | अत्र | ८९ | २ | क्रियामिति | क्रियाणामिति |
| ,, | २२ | करणम् | कारणम् | ९१ | २४ | नाशयस्य | नाशयत्वं |
| ७१ | २० | व्याप्तिश्चैव | व्याप्तिमेव | ९२ | १३ | पञ्चम्य | पञ्चमा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९२ | १७ | क्लेश | क्लेशाः |
| ,, | २० | बीज | बीजा |
| ९३ | १ | विवेके | विदेह |
| ,, | ३ | अन्या | अग्न्या |
| ,, | ४ | ततश्च | तच्च |
| ,, | ५ | इत्युक्तं | इत्युक्ता |
| ,, | १० | यामदे | याः अहे |
| ,, | १६ | विच्छित्य | विच्छेद |
| ,, | १८ | प्रवाद | प्रवाह |
| ९५ | ६ | ऽभावो | भावोऽ |
| ,, | १५ | बीज | बीजं |
| ,, | २० | होव: | ह्याव: |
| ,, | २३ | ख्यानेन | ख्यातेना |
| ९६ | ८ | दुःखभ | सुखभ |
| ,, | ९ | बुद्धितया | बुद्धिः तथा |
| ,, | १८ | पादिकं | पादिकां |
| ,, | २१ | भवन्ती | भवती |
| ,, | २५ | गोस्पदा | गोष्पदा |
| ९७ | २४ | तद्वा | तद्द्वा |
| ९८ | २६ | व्यक्ते | व्यक्ती |
| ९९ | २ | सुखामि | सुखाभि |
| ,, | ८ | वचनाद्वे | वचनाद्द्वे |
| ,, | २० | भव | भय |
| ,, | २६ | तस्यय | तस्येय |
| १०० | १२ | जन्म | जन्मनि |
| ,, | २६ | ज्ञानेन न | ज्ञानेन च |
| १०२ | ५ | दावदाध | यावद्बाध |
| ,, | ६ | ततश्च | एतच्च ते |
| ,, | १४ | वाणामपि | वाणामप |
| १०४ | २७ | विपाक | विपाके |
| १०५ | ४ | सविपा | स्वविपा |
| १०६ | १९ | पूर्वाप | पूर्वमुप |
| ,, | २० | ह्यष्टचत्वा | ह्यष्टवर्षा |
| १०७ | ६ | एवं भव | एकभव |
| | ७ | पथित | पन्थि |
| ,, | २० | दृष्टजन्म वेदनीयस्येति | अदृष्टजन्मवेदनीय इति |
| ,, | २७ | कर्मयपुप | कर्मण्याबाप |
| १०८ | १७ | कर्मण्याधाय | कर्मण्यावाप |
| ,, | २५ | प्रापणा | प्रायणा |
| १०९ | ३ | स्वा | वा |
| ,, | ६ | हंति सप्तमी | त्स्विह जन्मनि |
| ,, | ९ | वे | चे |
| ,, | १४ | वेदादि | वेदान्ति |
| ,, | ,, | त्सर्गिता | त्सर्गिकता |
| ,, | २४ | भावा | पाया |
| ,, | २६ | हेतुत्व | हेयत्व |
| ११० | ७ | वद्वे | वद्द्वे |
| ,, | १४ | संजटे | संज्वरे |
| ,, | १५ | स्थिरो | स्थिर |
| ,, | १७ | उपपद्य | उपपाद्य |
| ,, | १८ | वृत्ति | वृत्य |
| १११ | २ | वद्वे | वद्द्वे |
| ,, | ५ | चसुखा | सुखा |
| ,, | १६ | नुबद्ध | नुविद्ध |
| ,, | १८ | शरीर | शारीर |
| ११२ | २३ | विशेषेण | विशेषण |
| ११३ | ५ | स्वातन्त्र्य | स्वातन्त्र्ये |
| ,, | १० | उत्तर | उत्तरम् । |
| ,, | २३ | इतरं तु | इतरं त्व |
| ११५ | १४ | दारुविशेष: | विशेष: |
| ,, | १६ | सुखादिव | रूपादिव |
| ,, | २६ | योगमासनं | योगसाधनं |
| ११६ | १६ | इति | मिति |
| ,, | १९ | किं चा | किं च |
| ,, | २७ | हेतुः स्वरू | स्वरू |
| ११७ | ६ | त्वया | तथा |
| ,, | १३ | सत्त्वप्रमाण | सत्वे प्रमाणा |
| ,, | १५ | त्कदाद्व | त्कदाचिदव |
| ११९ | २७ | रूपत्वै | रूपत्वे |
| १२० | १० | चये न | त्रयेन |
| ,, | १७ | हेतुत्त्व | हेत्व |
| ,, | २३ | भेतृ | भेत्तृ |
| १२१ | २ | स्ताप्य | स्तप्य |
| ,, | ६ | वा प | वा ऽप |
| ,, | १४ | भवन्न तु | भवन्नु |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२२ | ८ | रूपतायां च प्रमाणां | रूपाणां चेन्द्रियाणां |
| ,, | ,, | कानां च | कानां |
| ,, | १२ | तदेत्त | तदेत |
| १२३ | ५ | सत्त्वादि | सत्त्वत्वादि |
| १२४ | १८ | शुन्य | शून्य |
| १२५ | ४ | किं च | ननु |
| ,, | १० | पद्यते | पद्येत |
| ,, | १८ | वस्थाशून्य | वस्थाऽशून्य |
| १२६ | १६ | कथं | कथं न |
| ,, | २० | मानान् | माणान् |
| १२७ | २ | वदति | वदन्ति |
| १२८ | १४ | स्तस्य | स्तस्याऽ |
| ,, | ,, | बीङ्कुजार | बीजाङ्कुर |
| ,, | २० | क्रमिति | क्रममिति |
| ,, | २१ | गामिता | गामिना |
| १२९ | ३ | तन्मात्राणां | तन्मात्राणि |
| ,, | ४ | षड्वि | षडवि |
| ,, | २४ | शब्दादि | जन्मादि |
| १३० | १६ | लिङ्गमिति | लिङ्गमात्रमिति |
| ,, | १९ | जङ्गमानां | जङ्गमतां |
| ,, | २२ | प्रतीप | प्रलीय |
| १३१ | ३ | स्यासङ्गत्वो | स्यालिङ्गत्वो |
| ,, | ४ | परस्पर | परस्य |
| ,, | ,, | शरीरादि | शशशृङ्गादि |
| ,, | १० | सत्ता | असत्ता |
| ,, | २२ | नाच्च | नात् |
| ,, | २६ | एव सिद्धे | असिद्धे |
| १३२ | १२ | प्राधान्य | प्रधान |
| ,, | २३ | तुच्छतया | तुच्छता |
| १३३ | ६ | व्यक्तरूप | व्यक्ताव्यक्तरूप |
| ,, | १२ | च प्रधानं | प्रधानं |
| १३४ | २ | रूपाश्रय | रूपाश्रप |
| ,, | ५ | वेति | चेति |
| ,, | १५ | नोत्पद्य | नोपपद्य |
| ,, | १९ | न तस्य | न तस्या |
| ,, | २५ | कत्त्वं न | कत्वेन |
| १३५ | ६ | ऊध्व | ऊर्ध्व |
| १३५ | १९ | सर्वा | सचा |
| १३७ | १० | यथा | यथाऽ |
| १३८ | ९ | मात्राश्च | मात्रा च |
| १३९ | ११ | रुक्तेर्म | रुक्तं म |
| ,, | १९ | सिष्टे | सिष्ठे |
| १४१ | ९ | प्रामाण्य | ऽप्रामाण्य |
| १४२ | १५ | अथ वा | अथ च |
| १४३ | ६ | चेत् ना | चेतना |
| १४४ | २२ | मन्यते | मन्यन्ते |
| १४६ | २५ | संसारो | संसारा |
| १४७ | ३ | ब्रह्मै | ब्रह्मो |
| ,, | ४ | आवश्य | अवश्य |
| ,, | २६ | दृश्यबुद्धिसत्वोपाधि रूपः | दृश्या बुद्धिसत्वोपारूढाः |
| १४८ | ९ | योग्य | योग्यत्व |
| ,, | २४ | वस्थान | वस्थानाऽ |
| १४९ | ४ | विरोधा | निरोधा |
| ,, | ५ | ज्ञाने | ज्ञान |
| ,, | १३ | दर्शन | ऽदर्शन |
| ,, | १९ | कारण | करण |
| १५० | ३ | सिद्ध्या | सिद्धा |
| ,, | १५ | भेदेषु | भेदेष्वपि |
| ,, | १६ | ष्येव | ष्वेष |
| १५१ | १ | तृतीय | द्वितीय |
| ,, | १७ | दर्शन | दर्शनं |
| १५२ | १ | सामान्यं | सामान्ये |
| ,, | ३ | बुद्धिः | बुद्धि |
| ,, | १२ | दैक्य | देव |
| ,, | ,, | बुद्धि | न बुद्धि |
| ,, | २० | स्वाधि | साधि |
| ,, | २५ | बुद्धिः | बुद्धि· |
| १५५ | ८ | स्तदव | स्तदप |
| ,, | १८ | विनाशे | विशेषे |
| १५६ | २४ | अथ दुःखा | सुखदुःखा |
| ,, | २५ | दिभिश्च | दिभिश्चाऽ |
| १५८ | ५ | हेतुत्व | हेतुत्वं |
| ,, | १८ | शुद्धिवि | शुद्धिर्वि |
| १५९ | ७ | आलोक | आलोको |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १५६ | २५ | भेदात् | भेदः । | १८१ | १८ | चरते | चरतो |
| १६० | १ | आकार | स्याकार | १८३ | ५ | न्मात्रमि | न्मात्रेरि |
| ,, | ३ | माध्यस्थं | माध्यस्थ्यं | १८४ | ३ | वाय | चाय |
| ,, | ४ | णाम् | णाम् | १८५ | १४ | पदास्या | पदस्या |
| ,, | ११ | भावो ऽपि | भावे ऽपि | ,, | १८ | देव | द्विव |
| ,, | १६ | आधू | आधु | ,, | २२ | सिद्धे | सिद्धेः |
| १६१ | १४ | वाम | वम | १८६ | १४ | बुद्धि | बुद्धिः |
| १६२ | १७ | तदसंभवा | व्रतत्त्वसंभवा | ,, | २२ | प्राप्तभू | प्राप्तभू |
| ,, | २० | ज्ञायत | जायत | १८७ | ,, | यद्धे | यद्धे |
| ,, | २१ | स्तयाप्य | स्तयाप्य | १८८ | २१ | तेपि | तोपि |
| ,, | २२ | सस्पृहारूपमिति | अस्पृहारूप इति | ,, | २४ | वृद्धिः तो | वृद्धितो |
| १६३ | १७ | चेत्यर्थः | वेत्यर्थः | ,, | २५ | णामो | णामो |
| १६४ | ११ | तावेति | तैवेति | १९२ | १६ | मध्वाख्यं | मध्वानं |
| ,, | १६ | अभाववासा | अब्देनोपवासा | ,, | २३ | रूप | रूप |
| ,, | १७ | सत्त्वस्वनोपस्य | सत्त्वस्वभावास्य | १९४ | ७ | वृत्ति | वृत्त |
| १६५ | २० | मागः वत्य | मागः सवत्य | १९५ | १७ | रप्यु | रभ्यु |
| ,, | २२ | भोगीत्यागिचेन्मु | भागी जीवन्मु | | १६ | सतोती | सचाती |
| ,, | २४ | तत्त्वसाचा | जीवतत्त्वसाचा | | २४ | संप्रती | संप्रली |
| १६७ | १८ | साध्वी | साध्वि | १९६ | १ | वेक | वेद |
| ,, | २३ | ष्ठवमि | ष्ठवायि | ,, | ६ | वेदमासीत् | वेदमावृत-मासीत् |
| १६८ | ६ | संख्येय | ऽसंख्येय | | | | |
| ,, | १३ | चेतनमुप | चेतनाचेतनमुप | ,, | १८ | असत्ता सं | असत्तासं |
| १६९ | १७ | धर्माद्यं | धर्माद्यं | ,, | १९ | सत्ता | सत्तां |
| ,, | २० | वेद | वेदः | ,, | २१ | सूत्रद्वयो | सूत्रद्वयस्थयो |
| ,, | २६ | चकानां सिद्धान्तानां | चिकानां सिद्धीनां | १९७ | १६ | त्तणं भे | त्तणभे |
| | | | | १९८ | २ | भावाभाव | अभावाभाव |
| १७२ | २५ | सिद्धेर्यो | सिद्धिर्यो | | १८ | त्तणसं | त्तणासं |
| १७३ | २ | दावधि | दर्वि | १९९ | १२, १३ | हूयते | ह्रियते |
| १७४ | २ | श्लिष्टाङ्ग | श्लिष्टाङ्गु | | | | |
| ,, | ३ | योगपद | योगपट्ट | २०० | २ | कौटस्य | कौटस्थ्य |
| ,, | ६ | समवस्था | समसंस्था | ,, | १३ | वस्थान | वस्थाना |
| ,, | ७ | यावन्ता | यावन्त्यो | ,, | २४ | धर्मप | धर्मिप |
| १७५ | ९ | क्वचित्प्रसङ्गो | क्वचित् षडङ्गो | २०१ | १५ | शान्तोदि | शान्तादि |
| १७६ | २० | तत्र | यत्र | २०२ | १५ | यायां | याया |
| १७७ | १५ | पुराणपु | पुराणाद्यु | २०३ | ७ | वाधर्म | चाऽधर्म |
| १७८ | ७ | व्यचाष्टे | व्याचष्टे | ,, | २१ | स्थावराणां | तत्स्थावराणां |
| १७९ | २२ | सदु | तदु | ,, | २४ | रूपं रसा | रूपरसा |
| १८० | १८ | युङ्त्त | युङ्क्त | २०४ | ११ | सूरा | सुरा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०४ | २२ | स्येनो | स्येननो |
| २०५ | ६ | रप्र | रप |
| ,, | २३ | मात्रमपि | द्वयमपि |
| ,, | २५ | भावितततया | भावितया |
| २०६ | २० | प्रकृतेः | प्रकृते |
| ,, | २४ | स्यवा | स्यैवां |
| २०७ | ३ | प्रान्तेति | प्रान्ते इति |
| ,, | ४ | पसत्ता | पसता |
| २०८ | २१ | मृतिके | मृत्तिके |
| २०९ | ६ | कर्षादि | कर्षादिभि |
| ,, | १४ | च्छोत्रस्ये | च्छोत्रस्ये |
| ,, | २१ | उभयत्र | यत्र |
| २१० | १६ | वक्ष्यमाणां | वक्ष्यमाणा |
| २१० | २४ | प्रत्ययणो | प्रत्ययो |
| २११ | १६ | पश्वा | पश्चा |
| २१२ | २७ | पदभावे सह-कारिणि | पदभावे सह-कारीणि |
| २१४ | १ | व्यवहृो | व्यवहृि |
| ,, | २३ | लक्षणा | लक्षिता |
| २१५ | १६ | श्चैत्राग्निना | चैत्रोग्निना |
| २१८ | ११ | विषयक | विषय |
| २२० | ७ | मरिष्टि | मरिष्टे |
| २२१ | २० | संग्रही | न संग्रही |
| २२२ | २३ | स्थिता | स्थिताः |
| २२३ | १० | रात्रिं दिन | रात्रिं दिव |
| २२४ | १३ | संप्र | सप्र |
| ,, | १५ | पर्यन्तेन | पर्वतेन |
| ,, | २१ | अगडाणां | अगडानां |
| २२६ | ४ | पुरास्थिता | पुरोहिता |
| ,, | ८ | निर्माणे | निर्माण |
| ,, | १४ | प्रति | प्रतीति |
| ,, | १७ | ईश्वराद्धि | ईश्वरा द्धि |
| २२७ | २ | रतया | रक्तया |
| ,, | ७ | माक्रत | माक्रमत |
| ,, | १० | स्तस्य | स्तस्य |
| ,, | २२ | नान्तर | नानन्तर |
| ,, | २५ | ननु | न तु |
| २२८ | १० | रथस्या | रथस्ता |
| २२८ | १२ | तवे | तत्रे |
| २२९ | २३ | पञ्चमो | पञ्चमीं |
| २३० | ६ | भोगम | भोगम |
| ,, | १४ | सूत्रार्थं | सूत्रांशं |
| २३१ | १ | सान्त | स्वान्त |
| ,, | १६ | गान्तर | गान्तरत्व |
| ,, | १९ | तानि | तान् |
| २३३ | ४ | प्रदन्तो | वदती |
| ,, | ६ | विशेषं | विरोधं |
| २३३ | १७ | प्रतिभाष्याः | प्रातिभाद्याः |
| २३४ | ३ | प्रतिभावे | प्रातिभादे |
| २३५ | २० | पते | पत्ते |
| २३६ | ११ | समु | सम |
| ,, | १३ | सरणं | सरण |
| २३७ | २६ | प्राच्य | प्रच्य |
| २३८ | १ | सङ्गात् | सङ्गाच्च |
| ,, | १२ | चान्यत् | चान्यत्र |
| ,, | १९ | ह्री | ह्रि |
| ,, | २० | य | यि |
| २४० | ३ | यये | यये |
| ,, | २२ | वृत्तिभे | वृत्तिभें |
| ,, | २३ | द्मं | द्म्यं |
| २४१ | १५ | मूल | स्थूल |
| ,, | २० | तयोर्भे | तयोरभे |
| २४२ | ११ | हलिका | ह्रालिका |
| ,, | १२ | अपवाद्य | अवयवाप |
| २४३ | २१ | भुते | भूते |
| २४४ | ८ | विका | वीका |
| २४५ | ११ | पत्ति | पत्ते |
| ,, | १३ | संयमात् | संपत् |
| २४७ | २४ | चेच्च | चेत् |
| २४८ | १३ | कालए | कालइ |
| २५० | १६ | युक्ता | उक्ता |
| २५२ | ५ | शिद्धा | सिद्धा |
| ,, | २५ | तस्या | तःपा |
| २५४ | १५ | द्वेश्य | द्वेष्य |
| २५५ | १ | कारण | करण |
| ,, | १६ | धिर्जा | धिज्ञा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५६ | १६ | सिद्धान्ते | सिद्धन्ते |
| ,, | २३ | स्ता | स्ताः |
| २६२ | १८ | धोपि | धेपि |
| ,, | १६ | विदित | बिम्बित |
| ,, | २५ | तद्विधा | तु द्विधा |
| २६४ | ७ | कष्णा | कृष्णा |
| २६५ | १ | ननु | न तु |
| २६७ | ४ | ननुभू | नुभू |
| ,, | ७ | कृपान्तु | कृपा तु |
| ,, | १४ | तदादौ | तत्रादौ |
| ,, | १५ | यथा | तथा |
| ,, | २३ | विश्वा | विभूवा |
| २६८ | ५ | ष्टम्भात् | ष्टम्भाज् |
| २६६ | १ | दौनि | दौति |
| ,, | ५ | स्वभाव | स्वभावा |
| २७० | ११ | भमितं | भामितं |
| ,, | १६ | इत्येव | इत्येष |
| ,, | २१ | तथा | तथा च |
| २७१ | २ | मना | मत्रा |
| २७२ | ५ | चव | चैव |
| ,, | ८ | वासिष्टे | वासिष्ठे |
| ,, | १८ | वुपपद्यो | दुत्पद्यो |
| ,, | २३ | स्यवे | स्यैवे |
| ,, | २५ | सनकार्य | सत्कार्य |
| ,, | २६ | एतेभूते | एतेनभूते |
| २७३ | ३ | दर्शन | दर्शिन |
| ,, | ४ | पर्यन्त्रैः | पर्यन्तैः |
| ,, | १६ | सदास्ति | सतोस्ति |
| २७४ | १२ | संस्थितिः | संस्थितः |
| २७५ | ७ | ग्रहाणा | ग्रहणा |
| ,, | १४ | कारणा | करणा |
| २७६ | १ | जातीनां | जातीयानां |
| २७७ | ११ | स्तचि | स्ताचि |
| ,, | १७ | भान्ती | भान्त्ये |
| २७८ | ६ | प्रमाणा | अप्रमाणा |
| ,, | ११ | स्वादि | स्वमि |
| ,, | १७ | ज्ञानतज्जन्य | तज्जन्य |
| २७६ | २० | ज्ञानं | ज्ञानं न |
| २७६ | २३ | चित्तं | चलं |
| २८० | १७ | भूतच्ये | भूच्ये |
| २८१ | ३ | कारणौ | कारणत्वौ |
| ,, | २२ | ज्ञातत्वा | ज्ञानत्वा |
| २८२ | १३ | तस्यापि | तस्या अपि |
| ,, | २४ | भ.वादि | भानादि |
| २८४ | १ | स्वभास | स्वाभास |
| ,, | ६ | परेर्दृ | परेरदृ |
| ,, | २१ | पत्तिरि | पत्तेरि |
| २८५ | ४ | संयोगे | संयोगः |
| ,, | २० | व्यक्ति | वृत्तिः |
| २८६ | १६ | कर्मकर्तृ | न कर्मकर्तृ |
| २८७ | १४ | वादशून्य | वादः शून्य |
| २८८ | ६ | व्याहितेः | व्याहितः |
| ,, | २० | नत्वन्यः | नन्वन्यः |
| २६० | २४ | क्लौ | क्लौ |
| २६१ | ५ | भ्योग्या | भोग्या |
| २६२ | २ | रूपावयव | रूपत्रय |
| ,, | ११ | विपर्यासित | विपर्यासति |
| २६३ | ४ | सिद्धा | सिद्धौ |
| ,, | ६ | रूपस्या | रूपस्य |
| ,, | २२ | ऽविशेषान्ते | विशेषान्ते |
| ,, | २५ | शक्तिमदा | शक्तिशक्तिमदा |
| २६४ | ११ | परिणामि | परिणामितुं |
| ,, | १८ | रम्भकं | रम्भक |
| २६५ | १८ | चिततोदे | चिन्तोदे |
| ,, | २४ | मतिर्बाह्येति | मतिर्वा ह्येति |
| २६७ | ६ | पूर्वं स | पूर्वसं |
| २६८ | १ | तच्चिन्त्यत | तच्चिन्त्यन्त |
| २६६ | ३ | दिवि | त् वि |
| ,, | ७ | ज्ञानं स | ज्ञानस |
| २६८ | २५ | इदानींमु | इदानीमु |
| २६६ | १८ | वृत्तिसत्ता च | वृत्तिसन्तान |
| ,, | २१ | भोगास | भोगस |
| ३०० | २ | तत्र इति | तत इति |
| ,, | २३ | अर्थे | ऽनर्थे |
| ,, | २४ | संसूचि | संसूति |
| ३०२ | ६ | तिष्ठेत्युक्तं | तिष्ठेष्वित्युक्तं |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३०२ | १७ | परिमाण | परिणाम |
| ३०३ | १५ | निवृत्तिश्चे | निवृत्तिरि |
| ,, | २० | पुरुषार्थेत्यारभ्य | शक्तिरित्यन्तं सूत्रम् । |
| ३०४ | ६ | ननु | नतु |
| ,, | १० | मात्रस्थूल | मत्र स्थूल |

॥ इति ॥



# योगवार्तिकस्थानां कतिपयप्रधानोद्देश्यविधेयानां सूचीपत्रम्


पृष्ठ ।

अ ।

अणिमादयः २४४ ।
अतिपारमार्थिकसत्ता १३३ ।
अतीतानागतज्ञानम् २०६ ।
अध्यात्मप्रसादः ८० ।
अध्यासः २१४ ।
अनवस्थितत्वम् ५६
अनुमानम् २० ।
अन्तःकरणप्रक्रिया ६६ ।
अन्तरायाः ५६ ।
अन्तर्धानम् २१६ ।
अन्तर्यामी ४६ ।
अन्यथाख्यातिः २१ ।
अपरबन्धजीवन्मुक्ती १२८ ।
अपरान्तज्ञानम् २२० ।
अपवर्गः १२६ । २६५ ।
अभिनिवेशः ६६ ।
अभिमानस्य जगद्धेतुत्वम् ६६
अभिव्यक्तिः ७४ ।
अभ्यासः २८ ।
अरिष्टम् २२० ।
अर्थग्रहणम् १३ ।
अलब्धभूमिकत्वम् ५६ ।
अलिङ्गम् ७७ । १३१ ।
अवच्छेदवादः ४७ ।
अवयवी ७३ ।
अविद्या ६४ ।
अविरतिः ५६ ।
अविशेषाः १३० ।
अवीचिः २२२ ।
अवैधर्म्यलक्षणाभेदः ५८.।
अष्टाङ्गानि १६० ।
असंप्रज्ञातयोगः ५ । ३५ ।
असंप्रज्ञातयोगस्य ज्ञानाद्विशेषः ६ ।

पृष्ठ ।

असंप्रज्ञातस्य फलम् १२ ।
अस्मिता ३४ । ६४ ।
आकारमौनम् १६४ ।
आकाशगमनम् २३६ ।
आकाशम् २३८ ।
आगमाख्यावृत्तिः २० ।
आचार्यः १५३ ।
आत्मत्वम् ५५ ।
आत्मनानात्वसिद्धिः २६२ ।
आत्मनोऽज्ञेयत्वम् ज्ञातत्वं च १३ । २३२ २८४ ।
आद्योमोक्षः २६५ ।
आनन्दः ३३ ।
आलस्यम् ५६ ।
आसनम् १७३ ।

इ ।

इन्द्रियजयः २४५ ।
इन्द्रियम् २४६ ।
ईश्वरः ४१ ।

उ ।

उत्क्रान्तिः २३५ ।
उदानजयः २३५ ।
उपायप्रत्ययः ३८ ।
उपेक्षा ६३ ।

ऋतम्भरा ८१ ।

ए ।

एकतत्त्वाभ्यासः ६० ।
एकाग्रम् [illegible] ।
एकेन्द्रियसंज्ञा ३० ।

क ।

कण्ठकूपः २२८ ।
करणलक्षणम् १८ ।

पृष्ठे ।
करुणा ६३ ।
कर्म २६३ ।
कर्मकर्तृविरोधः २३२ ।
कर्मलक्षणम् २३२ ।
कल्पः २२५ ।
कल्पप्रलयः ४६ ।
कायव्यूहज्ञानम् २२८ ।
कालः ३०३ ।
काष्ठमौनम् १६४ ।
कूर्मनाडी २२८ ।
कृतार्थाः २६६ ।
कैवल्यम् १५३ । २४६ । ३०४ ।
क्रमः ३०१ ।
क्रियायोगः ८८ ।
क्लेशकर्मनिवृत्ति २६७ ।
क्लेशाः ६१ ।
क्षणतत्क्रमौ २५१ ।
क्षिप्तम् ४ ।

ख ।

ख्यातिः १२ ।

च ।

चतुर्विधः प्रलयः २०७ ।
चरमासंप्रज्ञानम् ११ ।
चितेर्दुःखभोगः १२ ।
चित्तं न स्वाभासम् २८३ ।
चित्तं सर्वार्थम् २६१ ।
चित्तभूमयः ४ ।
चित्तविक्षेपः ५६ ।
चेतने बुद्धिप्रतिबिम्बम् १३ ।
चैतन्यम् ६ ।

ज ।

जन्म १०० ।
जात्यन्तरपरिणामः २५६ ।
जीवन्मुक्तः ६३ । ६८ ।
जीवस्य पूर्णत्वनित्यत्वाद्यंशः ५८ ।
ज्ञानयोगः ८८ ।

पृष्ठे ।

त ।

तन्मात्राणि १३६ ।
तारकम् २५६ ।

द ।

दिव्यं श्रोत्रम् २३७ ।
द्रव्यम् २४१ ।
द्रष्टा १४० ।
द्विजः २१५ ।
द्वेषः ६६ ।

ध ।

धर्ममेघध्यानम् ८ । २६८ ।
धर्मो २०१ ।
धारणा १८३ ।
ध्यानम् १८५ ।

न ।

न प्रकृतेः स्वातन्त्र्यहानिः २६१ ।
नाभिचक्रम् २२८ ।
नित्यत्वम् ३०१ ।
निद्रा २३ ।
निमित्तकारणता २६१ ।
नियमाः १६४ ।
निवेदनम् ११ ।
निरुद्धम् ४ ।
निर्बीजः ३६ ।
निर्बीजसमाधिः १० । ८५ ।
निर्माणचित्तानि २६२ ।
निर्वितर्कासमापत्तिः ७२ ।
निस्सत्तासत्तम् १३१ ।

प ।

पञ्चस्कन्धाः २८७ ।
परचित्तज्ञानम् २१६ ।
परमबन्धपरममुक्ती १२८ ।
परमात्मा ४६ ।
परशरीरावेशः २३४ ।
परंवैराग्यम् ३१ ।
परिणामः ६ । ११६ ।
पारमार्थिकं सत् १३१ ।

